यजमानाय सुन्वत आग्ने सुवीर्यं वह । देवैरा सत्सि बर्हिषि ॥
समिधानः सहस्रजिदग्ने धर्माणि पुष्यसि । देवानां दूत उक्थ्यः ॥ ( ऋ० ५।२६।४-६ )
विश्वस्य हि प्रचेतसा वरुण मित्र राजथः । ईशाना पिप्यतं धियः ॥
आ नो गन्तं रिशादसा वरुण मित्र बर्हणा । उपेमं चारुमध्वरम् ॥
उप नः सुतमा गतं वरुण मित्र दाशुषः । अस्य सोमस्य पीतये ॥ ( ऋ० ५।७१।१-३ )
आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः । ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवः ॥
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सुन्वन्त्वा वसु ।
शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसि ॥ ( ऋ० ८।५३।३-४ )

आ नो०···मदः ( १४९२-१४९३ )। यस्यायं···इन्दवः( १६०९-१६१० ) ।

मन्द्रो होता गृहपतिरग्ने दूतो विशामसि । त्वे विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥
त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः । स त्वं नो अद्य सुमना उतापरं यक्षि देवान्सुवीर्या ॥ दूतं(१२)
( ऋ० १।३६।५-६

स हि वेदा वसुधितिं महाँ आरोधनं दिवः । स देवाँ एह वक्षति ॥
स वेद देव आनमं देवाँ ऋतायते दमे । दाति प्रियाणि चिद्वसु ॥ ( ऋ० ८।८।२-३ )
राजा सिन्धूनामवसिष्ट वास ऋतस्य नावमारुहद्रजिष्ठाम् ।
अप्सु द्रप्सो वावृधे श्येनजूतो दुह ईं पिता दुह ईं पितुर्जाम् ॥
सिंहं नसन्त मध्वो अयासं हरिमरुषं दिवो अस्य पतिम् ।
शूरो युत्सु प्रथमः पृच्छते गा अस्य चक्षसा परि पात्युक्षा ॥
मधुपृष्ठं घोरमयासमश्वं रथे युञ्जन्त्युरुचक्र ऋष्वम् ।
स्वसार ईं जामयो मर्जयन्ति सनाभयो वाजिनमूर्जयन्ति ॥ (ऋ० ९।८९।२-४) मा भे०···पिबा (१६०५-१६०६
सत्यमित्था वृषेदसि वृषजूतिर्नोऽवृतः । वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥
वृषणस्ते अभीशवो वृषा कशा हिरण्ययी । वृषा रथो मघवन्वृषणा हरी वृषा त्वं शतक्रतो ॥
वृषा सोता सुनोतु ते वृषन्नृजीपिन्ना भर । वृषा दधन्वे वृषणं नदीष्वा तुभ्यं स्थातर्हरीणाम् ॥
( ऋ० ८।३३।१०-१२

इमा···विप्रराज्ये ( १६०७-१६०८ ) । अञ्जते० ( १६१४ ) । अग्ने गो० ( १६१६ ) । विपश्चिते० (१६१५)

देवो वो··· दाशुषे ( १५१३—१५१४ ) । अदर्शि० ( १५१५ ) । अस्मात्०···शर्मणि ( १५१६—१५१७ )

मध्वोर्धारामनु क्षर तीव्रः सधस्थमासदः । चारुर्ऋताय पीतये ॥
प्र निम्नेनेव सिन्धवो घ्नन्तो वृत्राणि भूर्णयः । सोमा असृग्रमाशवः ॥
अभि सुवानास इन्दवो वृष्टयः पृथिवीमिव । इन्द्रं सोमासो अक्षरन् ॥ ( ऋ० ९।१७।८,१,२ )
इमे त इन्द्र सोमास्तीव्रा अस्मे सुतासः । शुक्रा आशिरं याचन्ते ॥
ताँ आशिरं पुरोळाशमिन्द्रेमं सोमं श्रीणीहि । रेवन्तं हि त्वा शृणोमि ॥
हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम् । ऊधर्न नग्ना जरन्ते ॥ ( ऋ० ८।२।१०-१२ )
पवमान ऋतं बृहच्छुक्रं ज्योतिरजीजनत् । कृष्णा तमांसि जङ्घनत् ॥ ( ऋ० ९।६६।२४ )

पवमानो···सुवीर्यम् ( १३११-१३१२ )।

प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः । नरं नृषाहं मंहिष्ठम् ॥
यस्मिन्नुक्थानि रण्यन्ति विश्वानि च श्रवस्या । अपामवो न समुद्रे ॥
तं सुष्टुत्या विवासे ज्येष्ठराजं भरे कृत्नुम् । महो वाजिनं सनिभ्यः ॥ ( ऋ० ८।१६।१-३ )

प्र वां० ( १५७५;१७०३ ) ०आ वृणे । इन्द्राग्नी० ( १५७६;१७०४ ) ०कर्मणा । इन्द्राग्नी० ( १५७७;१६९४ ) ०पथ्या अनु । तोशा० ( १७०२ ) ।

प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत । वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥
अभि प्र भर धृषता धृषन्मनः श्रवश्चित्ते असद् बृहत् ।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः ॥ ( ऋ० ८।८९।३,४ )

इन्द्रं ···इन्दवः ( १५८७-१५८८ ) । प्र तत् ( १६२६ ) । किं० ( १६२५ ) । वषट् ···ध्रुवा वहन्तीन्दवो द्युम्नमापो न स धृक् ( १६२७-१६२३ ) । वाय ···विश्वायुः ( १६३०-१६३६ ) ।

न हि ते अग्ने तन्वै क्रूरं विवेद मर्त्यः । कपिर्बभस्ति तेजनं पुनर्जरायु गौरिव ॥
अग्ने विश्वेभिरग्निभिर्देवेभिर्महया गिरः । यज्ञेषु य उ चायवः ॥
अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् । शिशीहि नः सूनुमतः ॥
अग्ने सहस्व पृतना अभिमातीरपास्य । दुष्टरस्तरन्नरातीर्वर्चो धा यज्ञवाहसे ॥ ( ऋ० ३।२४।४,५,१ )
नदं व ओदतीनां नदं योयुवतीनाम् । पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ।
ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥ ( ऋ० ८।६९।२, ३ )

अग्ने···पूर्व्यम् ( १५५२-१५५३ ) । प्र सुन्वा···असदम् ( १३८६-१३८८ ) । मो···मदीषु ( १६७५-१६७८ ) । होता···तना ( १४७७-१४७९ ) । त्यमु···धने ( १६४२-१६४४ ) । प्र सोमासो···पीतये ( ७६९-७७१ ) । करतं··· दुरिता ( १६८२-१६८३ ) ।

तं त्वा यज्ञेभिरीमहे तं गीर्भिर्गिर्वणस्तम । इन्द्र यथा चिदाविथ वाजेषु पुरुमाय्यम् ॥
यस्य ते स्वादु सख्यं स्वाद्वी प्रणीतिरद्रिवः । यज्ञो वितन्तसाय्यः ॥
उरु णस्तन्वे३ तन उरु क्षयाय नस्कृधि । उरु णो यन्धि जीवसे ॥ ( ऋ० ८।६८।१०-१२ )
यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो । महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥
तव द्युमन्तो अर्चयो ग्रावेवोच्यते बृहत् । उतो ते तन्यतुर्यथा स्वानो अर्त त्मना दिवः ॥
एवाँ अग्निं वसूयवः सहसानं ववन्दिम । स नो विश्वा अति द्विषः पर्षन्नावेव सुक्रतुः ॥ ( ऋ० ५।२५।७-९ )

अया···यातवे ( १२१६-१२१७ ) ।

इन्दुरिन्द्र इति श्रवमग्नो विवंधा असि होता पावक यक्षि । मन्द्रो यजिष्ठो अध्वरे ॥ ७ ॥
विष्यो विश्शुक्र मन्मभिरद्रोघमा वहोशते । यिविष्यन्देवमजस्र वीतये ॥ ८ ॥
अभिप्रियं सिपुधिता वसो गहि मन्दाव धीतिभिर्हितः ॥ ९ ॥
शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥ ४ ॥
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥ ५ ॥
आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक्च सूर्यं दृशे ॥ ७ ॥ ( ऋ० १०।९।४, ५, ७ )

तं गूर्धया···पूर्व्यम् ( १६८७-१६८८ ) ।

त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे । त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यम् ॥
कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि ।
आ न ऋते शिशीहि विश्वमृत्विजं सुशंसो यश्च दक्षते ॥ ( ऋ० ७।१६।५, ६ )

वा त० ( १८४० ) । यद्दो० ( १८४२ ) । प्र वो···समापीन् ( १७२३-१७९५ ) । तया···हि कम् ( १४३६-१४३८ ) । उत वात० ( १८४१ ) । इन्द्र क्रतुं ···तरामसि ( १४५६-१४५७ ) ( खण्डाः १-३० ) ॥ मन्त्राः

इत्युत्तरार्चिकः समाप्तः ।

